# ॥ श्रीनिवासगुणाकरः ॥

श्रीः
अथ श्रीवरदाचार्यविरचितः श्रीनिवासगुणकरः ।
वादिकण्ठीरवश्रीमद्वरदार्येण धीमता ।
व्याख्या श्रीवासकाव्यस्य लिख्यते पदयोजनी ॥

श्रीवेङ्कटेश्वरस्तोत्रमारभते--
श्रीभृत्सद्वृषगोत्रशेखरमणे वेदप्रवक्तः शुचे
लोकास्वाद्यचरित्र सुन्दरतनो धीवारिभिः क्षालिते ।
सस्वैतद्वरदक्षिणा शुभगुणा सालङ्कृतिर्विस्फुर-
त्सद्वृत्ता कविता मया तव पदे दासेन भाव्याऽर्प्यते ॥ १॥

वाण्यास्योऽसमदृक् सहस्रवदनो द्योसत्पुरोधाःस्वभू-
हृज्जादात्तवरः पुराणवरकृत् तत्पुत्रकस्तत्सुतः ।
सेनेशो वरभाष्यकृत् तव परा घण्टाऽहमल्पं परं
यौष्माकीनगुणादिकं कथयितुं लक्ष्मीश शक्तो न किम् ॥ २॥

व्योमाब्जायितसीमभूमिकमपि श्रीभृद्भवद्वैभवं
तावच्चित्सुलभं धृतामृतरसम् सञ्जीवनैकौषधम् ।
यावच्छक्ति वदामि यामि सुसुखं तेनैव कात्स्न्र्येन कः
पानाशक्त इति प्रभुञ्चति पयो गाङ्गं सतृट्चेतनः ॥ ३॥

वाणीनाथमुखामरर्षिशठजिद्रामानुजार्यादिवा-
ग्जाले सत्यपि शब्दशक्यशुभतायुक्ते त्रयीभाविनि ।
काङ्क्षेथे पितरौ ममैव मधुरं शब्दं युवां श्रीहरी
लोकेऽग्र्यात्मजवाक्चये सति शिशोरव्यक्तशक्यं [ब्दं] यथा ॥ ४॥

अघटितघटनायां त्वत्समोऽस्मि प्रसिद्धा
वृषधरधव सा ते पण्डितंमन्यतेद्धः ।
नुतिकृतिभरभारी दुर्घटं शास्त्रदृष्ट्या
परमिह घटयामि श्रीश शब्दार्थजालम् ॥ ५॥

पूर्वं व्यासमनुप्रविश्य महितानुच्चार्य शब्दान् स्वयं
तं पूजास्पदमातनोरसुपदे त्वं चौर्य [र] वत् कौतुकात् ।
अद्यैनं समनुप्रविश्य कुटिलान् शब्दानिमानुच्चरन्
मां हास्यास्पदमातनोष्यपि तथा शेषः कृतार्थोऽस्मि हि ॥ ६॥

निशामुखनटन्महानटकिरीटकोटिस्फुर-
त्सुधानिधिगलत्सुधामिलितगाङ्गभङ्गोपमम् ।
कवित्वमिह मे भुवि त्वदनुषक्तिमद्युक्तिम-
द्विधेहि कमलानिधे युवनिपीतबालास्यवत् ॥ ७॥

इच्छा सिद्धे न भजति जनिं किन्तु साध्ये ममेदं
चित्रं चित्तं स्वसहजतया शेषतामेव सिद्धाम् ।
लिङ्गद्वन्द्वस्फुरदजडिमत्वत्स्वरूपाभिनुत्यै
वाञ्छत्युच्चैर्वृषधरशिरोनीलकल्पक्षमाज ॥ ८॥

रमाऽपि कुसुमाधिकम्रदिमपाणिना सेवते
प्रमादरहितैव यत्तव तदङ्घ्रियुग्मं परम् ।
ममापि कठिने हृदि स्थिततयैव रक्तीकृतं
क्षमामिह कुरु प्रभो वृषधरेऽशक्ते मयि ॥ ९॥

कठिने ते मम चित्ते वृत्तिः शक्या न चेच्छुभं कुर्वेतत् ।
कुर्वन्ति तथा लोके नेदं त्याज्यं विभो किमायासेन ॥ १०॥

विष्णो त्वत्पदभाक्तरुव्रजमितो ध्वान्तच्छलान्निष्पिबन्
धूमालि विबुधव्रजं शुचिमुखं शुद्धाः कलाः प्रापयन् ।
स्वाः पीयूषमयीर्व्रतात्तक्रशिमाधिक्यो विशुद्धस्फुरत्-
सत्सङ्गोऽङ्घ्रिरुहश्रियै चरति ते श्रीश द्विजेन्द्रस्तपः ॥ ११॥

अरुणतरुणतरणि[किरण] विकसज्जलवर्तिजलजगर्भाभम् ।
वृषगिरिधव तव चरणं शरणं करवाण्यनर्घशातार्थम् ॥ १२॥

अम्भस्सम्भरितालवालबलवद्विश्वम्भरारम्भव-
द्रम्भास्तम्भविभञ्जकः करिकरः शेषाद्रिचूडामणे
स्सारंस्मारमुरुप्रभं म्रदिमभागूरुद्वयं ते ह्रिया
सङ्कोचं मुहुरेति कन्दरमुखं पीत्वा विषं यातिं च ॥ १३॥

नाभिर्नी लिमनीरनिम्नसरसी यत्पद्ममासीत्ततः
त्वच्छ्वासानिललौल्यभाजि युवयोः पित्रोः पुरः पश्यतोः ।
यत्रानेकमुखार्भको मधुरसव्यासाङ्गिभृङ्गीच्छटा-
सङ्गीताब्धितरङ्गसङ्गतमनाः प्राश्नाति डोलारसम् ॥ १४॥

श्वासो मन्दमरुन्मणिस्तु मुकुरो मन्दस्मितं चन्द्रिका
वेश्मोरो वनमालिका वृषधरेङ्डोला तनुत्विण्णदी ।

मध्वास्वादमदोत्पतन्मधुकरश्रेण्यम्बुबिन्दूत्किर
द्वार्यन्त्रं तव नाभिवारिजमिदं लीलाभिक्लप्त्यै श्रियः ॥ १५॥

कुक्षिस्थत्रैलोक्यगलोकौघविमर्दप्राप्तोच्छूनत्वोदयभाजो वलयस्ते ।
तत्सीमाकारा वलिसन्ध्यञ्चितरेखाः शेषक्ष्माक्षोणिभृद्धव
लक्ष्मीश विभान्ति ॥ १६॥

कुक्षिन्यस्तजगत्रयीजनघटासंमर्दजोच्छूनतासम्भूता
वलयश्च सन्धय इमास्तत्सीमरेखा इव ।
सद्धीरोदरबन्धनं विजयते तद्धारणादक्षता
सन्देहारचितं वृषाचलशिरश्चूडामणे श्रीनिधे ॥ १७॥

श्रीवत्सचिह्नवक्षाः श्रीवत्सलतातिशायिवात्सल्यः ।
श्रीवत्ससक्तचित्तः श्रीवस्तजिदाकृतिर्हरिर्जीयात् ॥ १८॥

तटित्पटुकुटीरभापटलहेमपेटीरमा-
घटीकुचतटीलसत्तरपटीरपङ्काङ्कितम् ।
नमद्धृदय पश्यतोहरतरं तवोरस्स्थलं
धगद्धगितसद्वृषद्वृषधरेश चित्तेऽस्तु मे ॥ १९॥

फुल्लेन्दीवरगुच्छसुन्दरशिखा प्रान्तस्फुटाब्जा
ततोऽधस्ताद्गुच्छयुगाञ्चिताग्रन्त विलसन्मल्ल्यग्रसत्पल्लवा ।
अप्राप्तोपमगन्धकान्तिमृदुताव्योमाम्बुजम्लानता न्यस्ता
चम्पकमालिकोरसि विभो केनापि शुद्धेन ते ॥ २०॥

एका त्वत्पदजा समुद्रमगमत्सिन्धुः परा वार्धिजा त्वां
शेषद्रिगृहं श्रिता चकचकन्नीरा लसच्छैवला ।
स्वब्जेन्दीवरशङ्खचक्रमिथुनावर्ता स्फुरत्सैकता
स्मृत्याऽप्यर्थितजीवनादिफलदा पापापनोदक्षमा ॥ २१॥

त्वद्दृक्पुष्पवदंशुजार्धहसनस्वापं
मधुध्राड्मासोपानैर्वलिभिस्समेत्य शिशवे नाभीजुषे चारुजे ।
दातुं स्वौषधिकाज्यमब्जमनिशं हस्ते वहन्ती भवद्-
वक्षस्थाभवरोगिणे दिशति मे किं नामृतं सत्कृपा ॥ २२॥

श्रीस्त्वल्लोचनपुष्पवत्करचयैरर्धप्रबोधं मधु-
भ्राज्यब्जं तव नाभिपद्मशिशवे वल्याख्यसोपानकैः ।
गत्वा दातुमिवौषधोज्ज्वलघृतं शङ्खं वहन्ती भवद्-

वक्षस्स्था भवरोगिणे दिशति मे किं नामृतं वत्सला ॥ २३॥

पश्चाद्बाहुयुगेन पद्मयुगले लक्ष्म्या समीपं स्वकं
नीते तावकमीक्षणं दिनकरश्चन्द्रश्च गोव्यापनैः ।
एकं विस्फुटयन् परं मुकुलयन्नित्यं सभृङ्गस्वनं
तस्या वक्त्ररुचिं कलां कुचरुचिं किं प्रापयत्यच्युत ॥ २४॥

चञ्चल्लोकजयेच्छपञ्चविशिखज्यावाहरावावली-
स्वादुत्वापहमाधुरीरसपिबद्वाचासुधाशीकरैः ।
जन्यान्धोमहतीसमुद्गतकलादेशैस्त्वदीशश्रुतिं
मातस्सिञ्चसि मा कथं मम कृते वीक्ष्यापि मे भद्दशाम् ॥ २५॥

भोगी चन्दनगन्धसङ्गमृदुतावृत्तायतत्वैर्भवद्-
बाहुश्रीजयदीधीरितो वृषगिरिं मत्वा जगद्रक्षणात् ।
बाहोः पोष्यघनाच्च भक्षितजगत्प्राणं घनद्वेषयुक्-
स्वं न्यूनं तव वीक्ष्य केतनमगाद्वल्मीकरन्ध्रं भयात् ॥ २६॥

वाराशिजादिनिजनारीसमूहकुचनीरोत्थकुड्मलगणे
तारेट्कलानिकरमूरीकृतोल्लसनभीरञ्चितं कृतवती ।
स्फाराङ्गुलिव्रततिसारप्रसूनततिराराद्धृताङ्कुशदशा
क्रूरासुरेट्करिणि हा राजते नखरपारम्परी तव हरे ॥ २७॥

अन्यावार्यातिभीमप्रतिकलरहितापारपाप्मास्मदीक्षा
दोषार्तौ पुष्पवन्तावरिदरकपटौ त्वन्मुखेनेक्षणोत्कौ ।
इच्छन्तौ साक्षितां स्वां मदितरविषयां पापनुत्ति नु
नात्तप्रत्युक्ती त्वत्कुतो वा परमिह वसतः किं वृषक्ष्माधरेश ॥ २८॥

धराधरधराधरं तव सुधाझरीमाधुरी-
निराकृतिधुरन्धरं दृढतरं निपीयाहवे ।
दरस्तव सुहृद्द्विषोर्ध्वनिमिषेण हि श्रोत्रयोः
सुधागरलवृष्टिकृद्भवति पुष्टिनष्ट्योः कृते ॥ २९॥

स्यालं श्रीश दिनेदिनेऽक्षतजलध्युत्पत्तिमस्तोपमत्-
वद्वक्त्राभिभवेच्छयाऽऽगतमथ त्वत्पन्नखेन क्षतम् ।
हीतं पीतकलङ्कदुर्भरगरं हा कालचक्रे विधुं
विन्यस्य भ्रमयस्यजेन विगरं कर्तुं रवात्तत्पितुः ॥ ३०॥

मत्वाऽऽस्याक्रमणोत्कमक्षियुगलं त्वच्छमश्रुरेखा नता

तन्मध्यं तव चोन्नतानुनयनेकृत्नासा जगाम श्रुतिः ।
स्वानुल्लङ्घनधीः समीपमलिकं भ्रूसीमलोलीकृते
मूर्धन्यञ्च कचं स भागमपरं भीत्या किमु श्रीनिधे ॥ ३१॥

न्यक्कृतकमलोल्लसितं श्रुत्यन्तनिषक्तमस्तमिथ्यादृष्टिक् ।
दृष्ट्वेव भक्तबृन्दं दृग्द्वयमासीत्तथा वृषाद्रीश ॥ ३२॥

आघ्रातुं मुखमीश किन्नु भवता कुन्दव्रजः प्रापितः
किं कारुण्यसुधाब्धिफेनपटली चित्ताद्बहिर्निर्गता ।
लग्ना त्वद्वदनेन्दुपानसमये माधुर्यलोभाद्वरात्
किं लक्ष्मीरथवा [रदभा] मुकुन्द किमिदं मन्दस्मितं तेऽथवा ॥ ३३॥

बन्धूकाम्बुजकुन्दचम्पकसुमान्योष्ठाक्षिदन्तावली-
घ्राणं मुख्यरुचीहया समभवन् युग्मं तु सारङ्गयोः ।
शाख्यन्तस्पृहयाल्वदभ्रमहिमश्रीदृक्त्वमाश्रित्य किं
तत्र श्रीप्रिय सर्वगन्धरससल्लब्ध्या सदा मोदते ॥ ३४॥

आराध्याराधन[क]परिशोधकवेदावलीधियै भवतः ।
छन्दःप्रवक्तुरास्ये विमले रदमालिके भवतः ॥ ३५॥

अघटितघटनालक्ष्यं वक्त्रेन्दौ श्मश्रुतिमिरमेतत्ते ।
नासाचम्पकनिकटे भ्रूभृङ्गश्रेणिकेव लक्ष्मीश ॥ ३६॥

जित्वा प्राकृतसाधनैर्जगदथो साध्येतरांस्तैर्मुनीन्
दिव्ये ते धनुषी भ्रुवौ रतियुतस्तूण्यौ च जङ्घे स्मरः ।
वर्ष्मेन्दीवरजालमङ्घ्रिकरदृग्वक्त्रं च पद्मान्यहो
यत्नैः प्राप्य चकार पूरुषमणे तैर्वल्लवीस्त्वद्विटाः ॥ ३७॥

साराचिरद्युतिकनीराभिरामतरधाराधराधिपघटा
दोराहवप्रचयधीरानुशासितभगोराशिजायुततनो
स्वाराण्मुखाग्रिमुखहीरालियुङ्मकुटभाराजिदीपपटली
नीराजिताङ्घ्रियुग नारायणाद्यपरमारादशर्म हर मे ॥ ३८॥

बृन्दीभूततमिस्रबुद्धिकलयच्चण्डांशुभामण्डली-
शङ्कामङ्कुरयत्सुरत्नरुचिरं शेषाचलाधीश्वर ।
बद्धं मूर्द्धजकुड्मलं कबलयन्नम्राधराश्यागिरत्-
त्वत्कारुण्यकलामिव प्रकटयत्येतत् किरीटं तव ॥ ३९॥

अलिजलधरबलभिदुपलतिमिरलघिमकलनसबलकबररुचः ।
जनदृगगुणपरिहृतिमतिकृतपरिवृति
भवति तव नु सुम मकुटम् ॥ ४०॥

श्रीभृद्रुद्धकचं श्रमैकफलदं किं ते किरीटं महत्
चित्रं मन्मकुटं शिरस्स्थमपि मे बिभ्रद्धरं भासयत् ।
सद्रम्यं परमं पदं त्ववति ते प्राचीनमप्युत्तरं
सर्वस्मात्परिपूरयत्युरुतराः स्वाशा महद्वर्ण्यते ॥ ४१॥

साक्षिण्यास्तमा दयां तव गता सर्वार्थविन्माधुरीयुक्
श्रुत्यन्तपदाभिरामनिनदा सर्वैस्त्वदीयैस्सह ।
त्वद्धण्टैव सहस्रधा निकटभाग्ब्रूते जगद्धूर्वहं
त्वद्धृन्मन्मकुटप्रसिद्धिमधिकां श्रीवल्लभ श्रूयताम् ॥ ४२॥

शेषत्वेन निरूपितं गुरुवरैस्तच्छेषतामाश्रितैः
स्वामित्वं निरुपाधिकं भजदहो निर्दोषमत्स्वत्वभाक् ।
लक्ष्मीभागधरीकृतं तु भवता लोकानुकूलं पुरा
त्वामुद्वास्य तव प्रभुत्वमकरोन्नो वेत्सि किं तत्प्रभो ॥ ४३॥

गावो यत्र निरूप्यमाणविलसद्रूपानुगच्छध्दृदः
सोत्कण्ठा विचरन्त्यहो सुमनसां पद्वाऽप्यजानां गवाम् ।
शीर्षेषु प्रतिभाति निर्मलदृशाम् त्वद्गत्युपायात्मता
यस्मिन्नेव विभाति तेन सदृशं लक्ष्मीश किं वर्तते ॥ ४४॥

गेहादेर्मनुजास्त्रिविष्टपसदस्तेषां पयोजासनः
तेषां तस्य च वेङ्कटाचलपते श्रीशस्य ते श्रीश पादद्वयम् ।
यत्तस्यापि हि पादुकामणिमयं संरक्षकं पुंमणिव्याकीर्णं
तदनन्यरक्षककथं मां सर्वदा रक्षतु ॥ ४५॥

स्तोत्रं गोत्रापतीनां न कुरु मुख मुधा स्वाय ते ज्ञा यदि स्युः
नो जानन्त्युक्तिशक्तिं त्रिचतुरपदधीलोलवाचो यदि स्युः ।
दुर्वाराखर्वगर्वाः परिभवचतुरास्सिद्धयो यद्यलभ्याः
नात्मश्लाघां सहन्ते न तव फललवस्तद्भज श्रीनिवासम् ॥ ४६॥

नो गच्छेः कविते सुते क्षितिपतिं त्वं चन्दनद्रुं धने
गन्धे लोलतया ससंशयबुधक्रूराहयस्तत्र हि ।
अन्योन्यैक्यगलत्कुदूषणविषाः साध्वोषधिस्पर्शतोऽप्येग्रे
त्वां बत मारयेयुरचिरात् तत् पत्रिपत्रं भज ॥ ४७॥

बोद्धारोऽपि समिद्धमत्सरतया नाद्धावहित्थाचणाः
शुद्धोक्तिष्वविशुद्धबुद्धिजननश्रद्धालुतात्युद्धताः ।
मद्धीकानपि विद्धयन्ति कविते श्रद्धत्स्व तेमेऽद्धावचोऽ
बद्धक्ष्मेशगुणा जगद्धवपदे नद्धा ममृद्धा भव ॥ ४८॥

विद्वद्द्वेषभृतो मुधापदगणाः प्रोच्चैस्स्वरा निस्त्रपाः
सङ्केतेन परस्परं स्वविजये साक्षित्वमप्याश्रिताः ।
सद्बुद्धीनपि वञ्चयन्ति विबुधान् भूपान्तिके नास्तिका
विद्याचित्तविघातुका भुवि कृते लक्ष्मीशमेवाश्रय ॥ ४९॥

गौर्गां गवा गवे गोर्गोर्गवि गौर्यस्य पाति यः ।
वराय पीडकान् व्याप्तान् दत्ते तं श्रीनिधिं भज ॥ ५०॥

वृषाचलेशितुः पदाश्रिताः कुभृन्मुदाऽऽपतत्-
फलादिवन्महाफलार्थिनोऽप्यवान्तरं फलम् ।
अकाङ्क्षितामपि श्रियं प्रयान्ति शेषवृत्तिसत्फला
परेरितां महीं पुरेव तस्य पादुका ॥ ५१॥

आराद्वेगादरिष्टं भवति बहुतरं यत्पदाब्जानतानां
सव्यौ भागौ यदीयौ निरवधिकरुची चारुभाभ्यां च माभ्याम् ।
विभ्राजत्पुष्पवद्भापरिहसनचणे यत्कराम्भोजहेती
श्रीनाथः श्रेयसी सोऽप्रतिमबलभवासङ्ग्यधीने करोति ॥ ५२॥

वनचर राम पुष्टवरगो द्रुहिणार्यतनो
विरचितसूत्रवेदमयकाव्यपुराणतते ।
परखपयोधिजीवशुभदेशनिवासरते [पर] मयि च
वसस्यहो सकृप वत्सल माधिपते ॥ ५३॥

उद्यत्सूनसमीपभाक् परभृता दृष्टं द्वितीयक्षण-
प्राप्तामार्दवमिद्धसूनजयकृद्दन्तावलीसङ्गिनः ।
लक्ष्म्यास्वाद्यरसस्य नित्यमृदुतारुण्यस्य चाटीकते
शेषाद्रीश तवाधरस्य किमु भासम्पल्लवं पल्लवम् ॥ ५४॥

गौर्यस्यामरवैरिनाशनपटुस्तत्कर्णनाथाचलो
धामैतन्निधिभानुकुञ्चिदलयुग्गेहाविहारास्पदम् ।
वत्सं तत्पदवैरिहेतिकपटग्राहिच्छिदावर्णितः
कामस्तच्छतजित्तनुस्तदितरा श्रीः पातु देवस्स नः ॥ ५५॥

कामो यस्य जगज्जनिस्थितिलयव्यग्रस्तनुस्तच्छतो-
त्कृष्टा श्रीरितरा ततो हि हृदयं तन्नित्ययोगोज्वलम् ।
भोगस्तत्पथदूरवर्तिमहिमा तद्वद्वराद्रिः पदं
नित्यं धाम तदेकनम्रसुलभं तद्वान्मुदे सोऽस्तु नः ॥ ५६॥

त्वत्कैङ्कर्यार्थदिव्यामिततनुजननीं श्रीश शक्तिं न कुर्वन्
वित्ताशां वर्धयेश्चेत्सुचिरमनुसृतैर्नैकदेश्यैर्धनाढ्यैः ।
मत्पर्वण्येव दत्तं किमपि परिमितं साम्बु कृच्छ्राद्ग्रहीतुं
बह्वीर्मे पार्थिवीर्वा सपदि दिश तनूर्वैधहैन्येऽपि मान्याः ॥ ५७॥

नागं पुष्करपुष्करहृदगतं नक्रास्यरुद्धाङ्घ्रिकं
भ्राजत्पुष्करपुष्करं स्मृतजगन्मूलं त्वरक्षो जवात् ।
तं त्वां पुष्करपुष्करायितसमोत्कृष्टं मणीन्द्रप्रभा-
स्फूर्जत्पुष्कर पुष्करप्रभुमहातल्पाश्रये श्रीनिधे ॥ ५८॥

दीनं मां कमलासमाश्रित नतं त्राहीति वाचं मम
श्रुत्वा किं न करोषि सुन्दर शिरःकम्पं समन्दास्मितम् ।
मद्दीनत्वतमश्छटाप्रतिभटस्फूर्जत्किरीटाग्रणी-
प्रत्युप्तोपलफालफल्यचपलामालासमुद्भासितम् ॥ ५९॥

चित्रं रमाधव यशोमुक्ता रन्ध्रोज्झितास्तवानन्तैः
परिगुम्फिता गुणौघैः सुदृशां हृदयङ्गमा विभान्ति ॥ ६०॥

अनर्घ्यफलदायके प्रणतिमात्रसाध्ये त्वयि
स्थितेऽपि धनकाङ्क्षया चिरमुपास्यमानार्थिनः ।
मदान्धतदुपेक्षया धनलवं च नोपश्यतो-
ऽप्यहो तदुपसेविनी भवति धीर्मम श्रीनिधे ॥ ६१॥

सेच्छं मामवितुं पदे तव सुखे वित्ते च दुःखात्मके
त्वं शास्त्रेण दृगादिना च सुगुणं दोषं च मे दर्शयन् ।
ज्ञात्वाप्यर्थिनिषेविणे विघटयन् लाभं पुनश्चार्थभाक्-
काङ्क्षस्योद्धरणाभ्युपायमधिकं श्रीभृद्विभोपश्यसि ॥ ६२॥

शस्त्रक्षाराग्निकर्माण्यतिहितमनसा सूनवे त्वं पितेवान्-
अन्त्रे दुःखानि कुर्वन् नृपसुतरचिताकृत्यदण्डागुरूणि ।
दत्त्वा हेतून् गतेरप्यवसि हिततमं त्वामुपेक्ष्योत्कटाघ-
व्याप्त्या दुःखैकभाजो वरकृप सुमतिं देहि मे श्रीनिवास ॥ ६३॥

रूपेणालललितेन मन्दविभवैरखैरनन्यस्थया
वृत्त्या चाचलता मया सकमल त्वं सूत्रधारो हरे ।
रम्यप्राणिसुभूमिके बहुरसैः पूर्णे जगन्नाटके
चित्रं हास्यरसं किरस्यलघुभिर्वेद्यं हि सामाजिकैः ॥ ६४॥

चित्ताकर्षिगुणं भुजङ्गजयकृद्दोषं प्रदानस्पृहाद्-
ईनारिप्रकाराग्रनर्तितसुगुं भक्तैकसक्ताशयम् ।
उद्वेल्लत्कनकाचलादरमितं वैकुण्ठगोष्ठ्यस्पृहां
सर्वाशानिलयात्मकं नतनिधे त्वत्तुल्यमीक्षस्व माम् ॥ ६५॥

श्रीभृत्पुण्यजनान्निहन्ति तव गौस्तात्रेक्षते मे पुनः
त्वं चेज्जिह्मगभोगसङ्गतिरतोऽहं चेत्तपस्वी महान् ।
अव्यक्तारिदरोऽसि वेद्मि न परं लोकं कुतस्तद्द्वयं
भेदे त्वत्सदसन्मयात्परमसद्रूपस्य साम्यं क्रमे ॥ ६६॥

मद्दोषव्रजमाश्रयव्ययकरं लक्ष्मीधर त्वद्गुण-
व्रातं लोकहिते रतं च मनसा जानन् भयाभीतिभाक् ।
दावव्याप्तमुखद्रुकोटरगतस्वाभीष्टवातापतद्-
वर्षत्सन्निहिताम्बुभृद्गणशुकन्यायेन  वर्ते हरे ॥ ६७॥

आचक्राम जगन्ति ते पदमिति स्यात्किंवदन्ती मृषा
नैवं चेन्मितभावृणोतु मम हृद्भूयोऽपि नैव त्यजत् ।
स्थाल्यन्धःकणनीतितोऽर्थयुगथो निश्चीयते सा मया
सर्वे श्रीभृदवेत्य शक्तिममितां त्वामाश्रयेयुस्ततः ॥ ६८॥

कुल्यायां सगरात्मजैः कररुहैरुत्पादितायां क्वचित्
सेतुं किञ्चिदकारयो वनचरैः पूर्वं किलैतत्कियत् ।
उत्ताराय भवाम्बुधेरपजने रत्नैर्गुणैस्तैर्हरे
सेतुं मे प्रतिपाद्य दर्शयसि चेच्छक्तो विनिर्णायसे ॥ ६९॥

अप्रकृतिबद्धमपि सुप्रत्ययमनवद्यमपि लसद्दोषम् ।
कमलाप्रियमपि कुपतिं गिरिस्थमपि श्रये नियन्तारम् ॥ ७०॥

सुरासुरार्याञ्चितपार्श्वराकाविलक्षणेन्दूपमितं रमेश ।
एकैकमुक्ताफलकर्णभूषं मुखं मुहुस्ते कुरुते मुदं मे ॥ ७१॥

दुर्वारोग्रमहाघजालयुगसौ किञ्चित् कथञ्चित्क्वचित्

कुर्याच्चेच्छरणागतिं कथममुं रक्षिष्य इत्यात्तभीः ।
अभ्यस्तं शरणागतावनवचः कृत्वाऽभ्रचित्रं गिरौ
दुर्गे श्रीश फणीशभृद्विषभिषग्वेषी निगूढोऽसि किम् ॥ ७२॥

गिरिच्छलबिलेशयप्रवरमूर्धनैल्यस्फुरन्-
मणिर्नरपतन्मृगक्रिमिदृशां च वीक्ष्यस्सदा ।
यदीक्षितनतस्पृहः कृतविलम्बनो वर्तसे
तदा त्वनृतमद्गिरा समयभाक् त्वमेवाव माम् ॥ ७३॥

भीकरकाञ्चनलोचनघूकदिवाकरमभीरुमनेकम् ।
नाकपशोकविमोक श्रीकर सूकरविभो नौमि त्वाम् ॥ ७४॥

दुस्त्यजफलीकरण सुश्रीः कनकाद्रिस्थितोऽपि वित्तार्थी ।
पुरतो निपतितमशरणमनवथिकार्तस्वरं त्यज न मां त्वम् ॥ ७५॥

मा ते स्ताद्रुडदेयतान्तसुम मय्यर्थित्वतस्तज्जगत्-
संसर्गान्नतु मत्स्वभावजनितं नायाचथाः किं बलिम् ।
वित्तार्थी कनकाद्रिभागसि ततो याच्ञानिवृत्त्युज्झितं
लोकं मां नय वीतदेहिवचनः स्यां किङ्करस्ते सदा ॥ ७६॥

भक्तैस्स्वार्थपरैरकार्युपकृतिः का वेति तान् रक्षसि
त्वद्वात्सल्यदयाक्षमाद्युपचयव्यग्रं परार्थे रतम् ।
कस्मान्नावसि मामघौघनिरतं स्वीयं प्रभो श्रीनिधे
घण्टाकर्णमुखावनादपि यशो मद्रक्षणे स्यान्महत् ॥ ७७॥

श्रीनाथ स्वापहारान्मयि तव रुडभूद्दण्डयस्येतमस्मात् मां
त्वत्क्रूरप्रकृत्या स्वविभवपरया प्रेरिता धीर्ममेत्थम् ।
चक्रे नाहं तदेनां निगलय तु पदे स्वं हृतं ते गृहाण त्वं
दूरे मे कुरुष्व प्रकृतिमपि पुनर्नापहारः प्रसीद ॥ ७८॥

रत्नैरितराप्रमेयपटुतैस्त्रासादिदोषोज्झितैः शुद्धैः
काञ्चनभूषणालिममितामुद्भासयद्भिः परम् ।
त्वत्सायुज्यमुपागतैस्तव वपुर्हारैर्जरीजृभ्यते
विष्णो त्वत्पदमप्रमेयमहिम श्रीनाथ सद्भिर्यथा ॥ ७९॥

सङ्ख्यावद्भिरपि व्यपेतगणनैर्गन्धोज्झितैरप्यलं
सामोदैर्विगतोग्रतैरपि मनस्सम्भूतधिक्कारिभिः ।
शेषाद्रीडसदृग्बलैरपि सदा त्वद्दर्शनप्रोज्ज्वलैः

सद्भिस्सेवितमादरात्तव कदा पश्येम पादद्वयम् ॥ ८०॥

हरिणा रिपुकरिणामुरुकरुणावितकरिणा
शरणागतिकरणामरतरुणाऽऽदिमगुरुणा ।
दरिणाऽम्बुजशरणाशरदरुणाम्बुजहरिणा
हरिणा कृतभरणा वयमरुणालिजिदरिणा ॥ ८१॥

तुल्योत्कृष्टबिवर्जितो यदि गुणैस्त्वं चेत्तणैः स्वं ते त
दन्यैरहं तादृङ्मानतमा त्रयी यदि ततः शुद्धस्य मत्सङ्गतः ।
नावद्यं तव किं भवेदिति पुरा दृष्टं न चेन्मादृशाः
किं दृष्टः क्वचनापि तत्कुरु भवच्छुध्यै विदोषं तु माम् ॥ ८२॥

वैकुण्ठे परतैव वैभववती सौशील्यमुख्यास्त्वह-
र्दीपास्तद्वृषशैलभाङ्नरमृगव्योमाङ्द्रुमाद्यैरपि ।
सेव्योऽस्यद्य बहुक्षुधस्तव चिरादेते गुणाः प्रस्फुरद्-
दर्वाराभितपापराशिममितं सम्प्राप्य तुष्यन्तु मे ॥ ८३॥

पददर्शकोरुयोजितहस्ताभ्यां निजपदाब्जनम्राणाम् ।
भवजलधिरूरुदघ्नः स्यादिति सूचयसि ननु वृषाद्रीश ॥ ८४॥

चञ्चद्वारमरीचिकाविषयदुर्वीरुद्वदव्याघ्रयुक्-
क्रुड्दावावृतिभीमसंसृतिवनीदग्धात्मसंजीवनीम् ।
सारासारभवत्कथारससुधां पीतां सदा कुर्वतां
शेषाद्रीश सुधा सुधाऽब्धिजनिता सा शर्करा शर्करा ॥ ८५॥

कान्त त्वन्मतिकान्तिशान्तिकरणप्रकान्तविक्रान्त्यसद्-
भ्रान्तिध्वान्तदुरन्तदुष्पथगतिश्रान्तिप्रतान्तान्तरम् ।
शान्तस्वान्तकृताच्छचिन्तनसुधासिक्तत्वदङ्घ्रिद्वयाः
सन्तो मां विनिवेशयन्तु सदमनसि स्वीये कटाक्षेण ते ॥ ८६॥

पाठान्तरम् -- एनःकृन्तनसन्ततोल्बणभवद्वृत्तान्तचिन्तासुधा-
सन्तुष्यन्तमिमं कुरु श्रितनिधे श्रकान्त चिन्तापह ॥ ८६॥

किं चामराणि धवलातपवारणानि सिंहासनानि शयनानि पदासनानि ।
पीताम्बराणि यदि वाऽत्र यथोचितं ते
सर्वोपचारकरणानि वृषाचलेश ॥ ८७॥

सिद्धान्तार्थविरुद्धबद्धकुहनाबौद्धप्रबन्धच्छटा-

श्रद्धासिद्धदुरध्वबाधितभवन्निर्धारणाधारणम् ।
मा त्वं मा कुरु मासमाश्रित सुधामाधुर्यमाधुर्यवाग्-
गुम्भे त्वद्गुणयुक्प्रबन्धनिकरे सम्बन्धयास्मन्मनः ॥ ८८॥

वक्षो दक्षिणमीक्ष्यतेऽक्षततटिल्लक्ष्म्या हि लक्ष्म्या जगद्-
रक्षादक्षकटाक्षयाऽक्षयभवत्स्वातन्त्र्यहृद्वीक्षया ।
मात्रा मे सतताश्रितं तव ततो मा त्रासमात्राऽसकृद्-
गाढप्रेमकृतागसोऽप्यतिशिशोः क्षान्त्येकरक्ष्यस्य मे ॥ ८९॥

अभ्राम्भोजसुखस्सदैव निरयव्राते स्वतन्त्रश्चरन्
प्राप्तं मद्ग्रहणेच्छया स्थिरसुखं त्वां मत्पूरे दुःखितम् ।
रुद्धं चाकरवं परास्ति यति ते शक्तिर्हरे त्वत्पुरे
नोभूयश्च्युतिदे निधेहि सुखदे मां श्रीनिधे सद्विधे ॥ ९०॥

रक्षतु लक्ष्मीशो मां रक्षितरक्षोऽनुजादिहितपक्षः ।
कुक्षिसुनिक्षिप्तजगल्लक्ष्मणमुनिदत्तलक्ष्मसल्लक्ष्यः ॥ ९१॥

शब्दादिदुर्विषयतापकयुग्भवेऽस्मिन् घोरज्वलज्ज्वलनतप्त इवाम्बरीषे ।
व्रीहि पुराणमपयः पटुतोज्झितं मां कालं
कियन्तमभिभर्त्जयसे रमेश ॥ ९२॥

केचित्पुण्यदिनेष्वनल्पयतना जिह्वाग्रमात्रे क्षणं
स्वाद्वल्पं गदकृच्च वस्तु समुदो यद्भुञ्जते तत्कियत् ।
पूर्णा सर्वरसैः समस्तगदभिन्निर्यत्नलभ्यामिता
लक्ष्मीनाथकथासमुज्ज्वलसुधा स्वाद्यास्तु मे सर्वदा ॥ ९३॥

सौम्यामेककलां शुचिं च दधतः सर्वज्ञशब्दं गुड-
क्ष्माभृच्छब्दमिवावमत्य निपुणो यत्सेवया प्राप्तवान् ।
निर्दोषाः सकलाः कलाः श्रयति तं शब्दं यथार्थं नमच्-
छीर्षालङ्कृतिपादुकोऽस्तु सततं देवस्तुरङ्गाननः ॥ ९४॥

यत्पादामृतमादराच्छिरसि यन्नामामृतं चानने
विभ्रत्प्राप शिवत्वमिन्दुमकुटः सर्वज्ञतां चोज्ज्वलाम् ।
धाता सोमकनीतवेदनिकरः सम्प्राप यस्मात्त्रयीं
तं शुभ्रांशुविशुद्धवाहवदनं श्रीवेङ्कटेशं भजे ॥ ९५॥

पूतास्त्वद्वचनाननाः क्षितिरुहः शेषाद्रिशीर्षस्थितान्
आरुह्य क्रतवे तवोडु सुमनोबुद्ध्याऽपचिन्वन्त्यहो ।

तद्बुद्ध्या मुहुरुत्सृजन्ति कुसुमान्युच्चैस्त्वराशालिनः
प्रत्यूपेऽद्य भज प्रबोधममलस्फूर्ते रमावल्लभ ॥ ९६॥

सत्तेजांसि सुमानि नन्दनवनादानीय देवाधिपैः
त्वत्पादद्वितयेऽर्पितानि सुधियां कुर्वन्त लक्ष्मीपते ।
त्वत्पूजापरतुङ्गवेङ्कटशिरोरूढद्रुमाग्रश्रित-
प्रभ्राजत्सुमबुद्धिभागपचितानीतार्पितोडुभ्रमम् ॥ ९७॥

त्वत्सम्प्राप्तविभूतिरक्षणभरः कारुण्यपूर्णो यति-
क्ष्माभृत्त्वत्पदयोः प्रपत्तिमकरोत्स्वीयार्थमप्यादरात् ।
इत्थं तद्वचने च दर्शितमभूदार्यैस्ततो मामचित्-
कल्पं वाऽप्यव वेङ्कटाद्रिधव तत्सम्बन्धतः श्रीनिधे ॥ ९८॥

दैन्योक्तिर्मम सप्तपादविनतिर्जाता तवाग्रे कुतः
कारुण्याम्बुनिधे रमेश विदितं नो पूर्णकामान्तिके ।
स्वान्तं तन्नवनीतकोमलतमं हेतुर्विधोरात्मभू-
वह्निप्रोज्ज्वलगोपिकाकुचतटीलग्नं विलीनं क्षणात् ॥ ९९॥

फुल्लाक्षिद्वितयेन ते मयि कथाः शृण्वत्यमर्यादतां
श्रुत्यादीनि दृशोर्विलोक्य करणान्यल्पेतरांस्त्वद्गुणान् ।
शब्दादीनविभागतोऽनुभवितुं वाञ्छन्ति शक्तस्समः
त्वं चैवं कुरु मापते विभजनं स्तोकेऽपि दायेऽयुधि ॥ १००॥

भूभृद्भिद्वज्रमाल्यस्फुरदमररिपुस्वामिवक्षोभिदस्ते
रेखामात्रेण नम्राः स्मरयुधि नखरा येषु सम्पीडनोत्काः ।
गोपीवक्षोजशैलेष्वसकृदकरुणोद्घट्टनैस्तैः किणत्वं
प्राप्तं गच्छेन्मृदुत्वं हृदयमिह कथं श्रीश मय्याकुलेऽपि ॥ १०१॥

लङ्कायां प्राप्य बन्दीं स्वयममरवधूर्वीतबन्दीर्व्यधाः श्रीः
आर्द्रागोराक्षसीश्च प्लवगवरभयादध्यरक्षः कृपार्ता ।
वन्दीज्ञे कर्मबन्दीविकलमनुकलं सागसं वा त्वदङ्घ्रयो
लग्नं कस्मान्न पासि खवशवृषधरे डम्ब मां वत्सलाऽपि ॥ १०२॥

खद्योतभावं भवदीयतेजः प्रद्योतनाग्रे तपनस्समेत्य ।
खद्योतनाम प्रययौ त्रिलोकीविद्योतमानप्रथ वेङ्कटेश ॥ १०३॥

सत्सङ्घातमहोसहे कुवलयप्रद्वेषिवृत्त्यञ्चिते
नित्यं पङ्कजनीष्टकारिणि कदाचित् प्राप्य वा दक्षिणाम् ।

भूयोऽप्युत्तरयाशया प्रचलिते प्रायो विसर्पत्करे
सर्वत्रैव कठोरगौ भयि कथं लक्ष्मीश नो तिष्ठसि ॥ १०४॥

वैकुण्ठादवतीर्य चौर्यनियतं जारत्वमभ्यस्तवान्
श्रीश त्वं नवनीतगोपवनिताः स्तोयानुषक्तीः श्रयन् ।
शब्दादौ विषये चिरान्मम रुचिं पातिव्रतीं बिभ्रतीं
हृत्वोत्कां त्वयि चेत्परे तु पुरुषे कुर्याः कृती स्यास्तदा ॥ १०५॥

शेषाद्रौ कुसुमं भवेयमपि तद्यत्स्वल्पमेकं फलं
नश्यद्वाग्द्रुमसङ्गतं न जनयल्लूनं करेणादरात् ।
त्वद्भक्ताय फलान्यदृष्टविलयान्यच्छान्यनेकान्यलं
सूते त्वत्पदगन्धकान्तिमृदुताश्चाप्नोति सार्थोदयम् ॥ १०६॥

जेतुं त्वां सजडान्तरस्सनिनदो मेघो वृषाद्रिं गतो
नित्यश्रीयुत साचिरद्युतिरिलां कुर्वन् सपङ्कां स्वतः ।
पङ्कध्वंसक शुद्धसेवित शुचित्यक्तो नभोगस्सुखिन्
लज्जाभागशनीद्धतापविकरो मुञ्चत्यहो जीवनम् ॥ १०७॥

समीरणसमीरणश्रितसुधन्यवन्यस्फुरत्-
सुमप्रकरतत्परभ्रमरमण्डलीवेष्टितम् ।
हिमाहिमभयादिवाधवलगाढवस्त्रावृतं
विमानमुपमानवाग्रहितमाश्रितं त्वाश्रये ॥ १०८॥

प्रयाति मुखतां विधौ तव कलङ्कहानेच्छया
भजालमभिजिद्युतं प्रियवियोगदुःखासहम् ।
चतुर्युगलमौक्तिकश्रवणभूषणत्वं तथा
नखप्रततितामपि स्वयमगाद्रमावल्लभ ॥ १०९॥

मद्रक्षैककृतक्षणेन भवता दत्तेन चित्तादिना
सेवायै करणेन साधु गुरुणा गोवालसंछेदनम् ।
छित्यै शिष्य इवैधसः कुचरितं कुर्वेऽतिदुर्वारधीः
मामीदृग्गुणमीश रक्षसि कथं शेषाचलाधीश्वर ॥ ११०॥

शाटीभास्वत्कटीत्विट्फणिपतिफणितिं चारुटीकासुकुञ्चीं
युष्मत्सर्वस्वपेटीं रुचिरविरचितां शुद्धगोराशिरत्नैः ।
वित्ताशायत्तचित्ते मयि वरदयया सन्निधे त्वं निधेहि
त्वद्वश्योऽवश्यतःस्यां तदनु तव पदं न त्यजेयं भजेयम् ॥ १११॥

प्रयाति मुखतां विधौ तव कलङ्कहानेच्छया
प्रियाविरहगूढधीर्भवदुरःस्थिताया गलम् ।
ननान्दुरिव रागतोऽश्लिषदनर्ध्यभासोज्ज्वला
वृषक्षितिभृदीश्वरासितकिरीट तारावलिः ॥ ११२॥

आखेटोत्कं वृषाद्रिप्रभुमतिजवन श्रीशमानीय देवं
चारञ्चारं पुरो मे विसदृगुपकृते क्रीतदासत्वमाप्तम् ।
मां त्वत्पादेऽभिराजद्गुणगण विनतं वीश्वरानन्दयित्वा
कर्माजन्याभवस्पृग्वर भज विनतानन्दनाख्यां शुभार्थाम् ॥ ११३॥

कांश्चिद्रक्षसि मां कुतो न कमलेण्णिर्हेतुकारुण्यभाक्
सेच्छास्ते यदि मां तथा न कुरुषे कस्मान्न यादृच्छिकम् ।
पुण्यं मे यदि तत्कुतो न तनुषे चित्कृत्यमेतत्तु चेत्
अन्तः किं कुरुषे ह्युदास्स इह चेच्छक्तः समो वा न किम् ॥ ११४॥

अग्रे तेऽपि विवादतत्परममुं किं पातयस्युग्ररुट्
दुःखे त्वत्पुर आकुत्र पुरास्थितोऽस्मि सहजं भूयोऽस्तु का मे क्षतिः ।
कुर्वे साधु विवादमेव यदि वा नित्ये पदे चैद्यवत्
घण्टाकर्णवदप्ययये क्षिपसि चेत्स्याः सार्थकोपस्तदा ॥ ११५॥

आरान्मङ्गलतुङ्गशृङ्गशशम्भृद्ग्रावस्रवद्वार्निशा-
सिद्धासेकमहालवालतरुजैर्नानास्फुरत्सौरभैः ।
विभ्राजन्मकरन्दकैः सुमरुता विक्षिप्यमाणैः सुमैः
आक्रान्तालयमिन्दिरासहचरं वन्दे महानन्ददम् ॥ ११६॥

तिष्ठन् वेङ्कटशैलमूर्ध्नि पुरतः कृत्वा पतङ्गं शुचि-
स्तोमेन स्फुरताऽऽवृतो ननु धरन् सव्ये पवित्रं करे
वारस्त्रीजननृत्तवीक्षणमपि त्यक्त्वाऽद्वितीयो हरे
गोपीजारतया समागतमघं मार्ष्टुं तपस्तप्यसे ॥ ११७॥

शब्दादिप्रवणांस्त्वदङ्घ्रिजलजात् द्वन्द्वं तृणीकुर्वतः
पश्यन्तो मनुजान् विसृष्टविषयाःसन्तोऽपि लक्ष्मीपते ।
प्राप्यप्रापकशोधकाः परिहृतौ भक्तेरपि प्रोत्सुकाः
तत्त्वत्पद्युगसद्धनं तृणमिव प्रेक्षन्त इत्यद्भुतम् ॥ ११८॥

शेषाद्रीश्वर मामकं दृढपदं बह्वर्थसन्धायकं
गोजालं व्रजवासिनामिव भवद्गीतामृतासारतः ।
व्यावर्त्यामितदुष्टसत्त्वविषयात् त्वत्सन्निधौ चारयन्

रक्ष क्षेमद किञ्चिदान्तरधनं गोपालक स्वीकुरु ॥ ११९॥

आर्यानार्याशयाम्भोभवभवनशिरश्छेदपापोग्रताप-
व्यग्रस्योग्रस्य भिक्षां प्रतिदिशमटतः पाणिलग्नं कपालम् ।
भ्राजत्तेजा व्यधास्त्वं स्फुटितमज यदा पार्श्वरक्तप्रसृत्या
पारम्यं रम्य सम्यक्तव जगदवदत्सत्तदैवादिदेव ॥ १२०॥

त्र्यक्षं रक्षकमाहवे विवशयन् रक्ष्यस्य बाणस्य च
त्वत्पौत्राय निजात्मजां कलयितुं द्वौ द्वौ समाश्लिष्य च ।
स्वेशं क्रन्दितुमात्मनोर्ननु दशां त्यक्त्वाऽवशिष्टान् भुजान्
छित्वा रक्षकतां त्वदेकनिलयां लक्ष्मीनिवासाकरोः ॥ १२१॥

न जाने श्रीजाने हितमहितमप्याहितमहा-
विमोहो मोहोद्यद्विषमविषयासक्तिविवशः ।
निहन्ताऽहन्ताया भवति न विवेको भवति धीः
खपद्मं पद्माङ्घ्री कथमिव लभेयं समगुण ॥ १२२॥

कदा वा शेषाद्रौ तुलितविरजस्वामिसरसी-
जले स्नातः पूतो भुवनभवन त्वद्भवनभाक् ।
अये लक्ष्मीनाथासुरविमथनास्मद्धननिधे
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ १२३॥

कदा वा पङ्कच्छिज्जनयदमृतं निर्मलनख-
श्रिया पङ्कोत्पन्नं विषनिलयमब्जं हसदिह ।
न ते रागं स्वीयं प्रकटयदिवालोहिततया
रमेश त्वत्पादद्वितयमज पश्येयमसकृत् ॥ १२४॥

कदा वा दावार्चिःपरिभवभवद्वैभवभव-
च्छिदम्भोभृद्दम्भोल्लसनहसनप्रोज्ज्वलतनो ।
सुसारासाराभाशरणकरुणादृष्टिरमिता
प्रसन्नाऽऽसन्नार्ता मयि परिपतेद्वेङ्कटपते ॥ १२५॥

धारकपोषकभोग्यत्वत्कः परमो गुरुर्दयालुर्नः
अस्मभ्यं त्वयि रचितन्यासोऽयं तत् सुमाव सम्बन्धात् ॥ १२६॥

अनेकैः स्वै रूपैर्धरति मम रूपाण्यनुदिनं
श्रमो भूयानासीदिति फणिपतेस्तानि कृपया ।
दधन्तीं श्रीभर्तर्निजपृथुकलक्ष्मीमनुपमां

शिरोबाहामध्ये वहसि किमु शेषत्वकुतुकी ॥ १२७॥

सुगन्धपरिबन्धुरं सविधसेविनां साम्यदं
लसद्विटपसद्भुजं किसलयाभदन्तच्छदम् ।
अदभ्रमलयं गिरिं श्रितममेयलक्ष्म्याञ्चितं
भवन्तमभजन्त किं पटुपटीरबुध्द्योरगाः ॥ १२८॥

त्वां वल्मीकगतं पुराऽतिसुरभे संवेष्टयन्तः फणि-
श्रेष्टाः शीर्षभुजावलग्ननिलया गन्धैकवश्यान्तराः ।
गोक्षीरच्युतवामलूरुकभयप्रत्यक्तवन्तद्भ्यः परे
भान्तीमे किमु वेङ्कटाचलपते श्रीवासबाह्वन्तरम् ॥ १२९॥

निर्हेत्वप्रतिषेधमाद्दगवनं हर्याखुवैर्यर्भक-
न्यायाभ्यां न भवत्यथापि शकनाद्बुध्द्वा निपेध्द्रेऽपि मे ।
षट्पत्कीटनयेन देहि समतां कः किं स्वतन्त्रं वदेत्
मर्यादा क्वचिदुज्झिता जयतु वा नित्या विभूतिः परम् ॥ १३०॥

मन्निन्दास्पृहयालुताळुरिह निर्बीजं कृपालुर्भया
गुप्तं वाङ्मनसापदं च मदघव्रातं स्वयं कीर्तयन् ।
आदत्ते समुदग्रमुत्तव च मत्पापापनुत्तिश्रमं
के किञ्चित् कुञ्चयति प्रपञ्चजननोदञ्चद्विरिञ्चेडित ॥ १३१॥

रक्ता द्दक् स्वगुणेन ते हृदकरोद्रक्तं श्रियः सङ्गतेः
त्वद्द्दङ्नीलतमा तु रक्तभकरोत् हृत्ते विचित्रं त्विदम् ।
स्वातन्त्र्यं गुणमग्रहीत्तव ददौ स्वं पारतन्त्र्यं च ते
भाग्यं मे पितरेतदत्यघयुजो माता त्वलं वत्सला ॥ १३२॥

रम्यस्यन्दमरन्दबिन्दुसुमनोबृन्दत्वदङ्घ्र्यम्बुज-
द्वन्द्वास्कन्दननन्दनीयविभवाः कुन्देन्दुमन्दस्मित ।
वन्दारुव्रजचन्दिराननं सुधानन्दाश्रुसन्दोहिनः
सुस्पन्दाः पवनाः त्वदद्युपवनाद्भूपावनाः वान्त्विति ॥ १३३॥

जीवाः पात्राणि माया विपुलयवनिका सूत्रजालानि कर्म-
व्राता मायाविकारा ह्युपकरणपदं यान्ति पेट्यौ पटिष्ठे ।
श्रीवत्सः कौस्तुभश्चाप्रकृतिपरवशा वीक्षणोत्का नटी श्रीः
लीलादीन् सूत्रधारः त्वमखिलभुवनं नाटकस्ते रमेश ॥ १३४॥

सममसममनन्तं मङ्गलं मङ्गलानाम्

अमलममलभासा भासयन्तं जगन्ति ।
हृदयहृदयमुष्णद्योतहृष्यन्नशुष्य-
त्कमलकमलनेत्रं स्तोत्रपात्रं करोमि ॥ १३५॥

प्रीतः श्रीश वपुःश्रमेण सुमदे भूरङ्गदासे धन-
च्युत्या प्रीततरः सुवर्णसुमुदे तोण्डप्रभौ निर्व्यये ।
नाथ प्रीततमः कुलालजरठे मृत्सूनदे तत्सुमे
प्रीतिस्ते सुलभे ममाद्य सुलभं हृत्पद्ममङ्गीकुरु ॥ १३६॥

नायं शीतकरो जगत्सु विहरत्त्वत्कीर्तिलक्ष्म्याः करे
श्वेताब्जं न च लक्ष्म बम्भरकुलं नो कौमुदी तारकाः
शीतत्विट्पटवासजातिकुसुमव्राताः सुरस्त्रीकर-
क्षिप्तास्तत्तनुसङ्गतास्तदनिशं ते हि भ्रमन्त्यम्बरे ॥ १३७॥

रूपि स्वं गुणमादधाति निकटे स्वच्छेऽन्यरूपास्पदे
दृष्टान्तस्फटिके जपासुममिह प्राप्तं विचित्रं महत् ।
श्यामोऽप्यात्मगुणेन काममतनोः श्यामाः पुरा गोपिकाः
रक्ता नन्दतपोविपाकजनने शेषाचलाधीश्वर ॥ १३८॥

ब्रह्माण्डे सरसि स्फुटोडुकुमुदे द्युर्वारि ते मेरुणा
क्रीडामण्डपिनीनचन्दिरमिपेणौजोयशस्सम्पदौ ।
पश्यन्तीष्वमरीष्वपक्ष्मचलनास्वाराद्विसर्पत्करे
सान्योन्यग्रहणस्पृहे भ्रममितः शेषाद्रिचूडामणे ॥ १३८॥

नेत्रारुण्यमिषेण वेङ्कटपते युष्मत्स्वरूपादिके
सत्त्वासत्त्वदृशोरुपर्यनुसृचलितस्वोद्देश्यभेदं परम् ।
भूषास्त्रत्वयुतत्वदायुधसमं प्रह्लाददैत्येन्द्रयोः
सन्दृष्टं युगपत्प्रदर्शयसि किं सद्रागरुट्त्वं पदम् ॥ १३९॥

रमाऽरुणपयोरुहप्रतिमयत्करैर्लोहिता
त्वमप्यधवलोत्पलप्रभवदीक्षणप्रेक्षणैः ।
गतोऽस्यसितताां ध्रुवं तव तदक्षियुग्मं सदा
मयि प्रसरतु प्रभो वृषधराध्रधाराधर ॥ १४०॥

दातृत्वोपकृतिप्रियोक्तिरहितान्नोद्यद्दयान् प्राभव-
स्फीतान् दर्शितदन्तपङ्क्ति धनिनः संसेव्यमानान्मया ।
मन्ये ह्युपकारकान् धनलवालाभाकुलं मां यतः
ते श्रीवेङ्कटशैलनाथ सदयं त्वां स्मारयन्त्यञ्जसा ॥ १४२॥

उष्णानुष्णसहिष्णुरेव विचरन्नुष्णांशुतेजश्चयं
भूष्णुं जिष्णुमजं च विष्णुमसुखं मुष्णन्तमर्थिस्थितम् ।
रैतृष्णामृगतृष्णया परवशो दुष्टाध्वनिष्णातधीः
श्रीशं कृष्णरुचिं विहाय नरमाः स्तौम्येष पुष्णात्विति ॥ १४३॥

वृत्तिर्मे न सतीति चेत्तव कुतः सर्वान्नभुक् सा सती
भिल्लीशेषफलाद जारनृपते दस्योऽङ्गनाध्वंसक ।
सूते पापमसौ ममैव यदि तत्किं निग्रहस्ते यदि
त्वद्वद्वीक्ष्य तदुज्झितः शिशुमिमं श्रीशाव भां तावकम् ॥ १४४॥

स्वातन्त्र्यप्रबलाघवीक्षणभिया त्वज्जीवयोर्वत्सला
श्रीरास्ते रुचिरोरसि प्रतिकलं स्वातन्त्र्यभङ्गात्ततः ।
वात्सल्यादिगुणा जयन्ति शरणं त्वं भीर्न न क्लिष्टता
सौख्यं तूत्कटमित्थमप्यरुचयो न त्वां भजन्ते जडाः ॥ १४५॥

चोरः कोऽपि वृषाचले बत महामायो जरीजृम्भते
आराध्यप्रजवप्रसारितगुणाकृष्टाः प्रमोदाञ्चिताः ।
तत्सात्कृत्य समग्रवञ्चितधिपः स्वं सर्वमन्यानपि
स्वं सर्वं तदधीनमेव कुरुतेत्येवं भणत्यन्वहम् ॥ १४६॥

मच्चक्षुःपरिपेयकौस्तुभमणे नावेक्ष्य मत्पातकं
रक्षायै हृदये निवेशितममुं मां शोभमानाज्जलिम्
मह्यं दर्शयसे भयं मम परं हर्तुं कृपाम्भोनिधे
श्रीशेषक्षितिभृन्निवास कमलाशुद्धान्तवक्षःस्थल ॥ १४७॥

स्वप्राणोश्चण्डपत्रोद्दलितनिजपदोद्यद्रजोवैभवेन
स्वाक्ष्यास्यभ्राट् स्वनाभिं श्रवणमपि निजं स्वं च कं छादयाद्भिः ।
भ्राजत्सत्त्वैस्तमोभाविवरणपटुभिर्जन्यसक्तैः स्वकृतैः
भिन्नाक्षो नस्वगीःस्थैः स्वहृदयशरणं चारुगुर्माः पुनातु ॥ १४८॥

श्रीभृन्मामव चक्षुषोश्च हृदये विन्यस्य मे सर्वदा
त्वां वर्ते विशयोऽस्ति ते यदि परित्यक्तेतरप्रत्ययः ।
त्वत्कारुण्यदृगापतत्तरलसद्वारैकपात्रं तु मां
कृत्वा तत्र विलोकयोज्ज्वलमते मा मध्ववाच्यादरः ॥ १४९॥

एह्यत्र मन्येऽद्य हरिष्यसे हृद्वृषाद्रिनाथेन हृतं तदासीत्
शब्दादिमेवं विषयं हसद्भिर्नतिर्गृहीता मम सद्भिरस्तु ॥ १५०॥

हृद्वो हरिष्यध्व इतीव मन्ये वृषाद्रिभर्त्रैव हृतं पुरा तत्
इति प्रकृष्टान् विषयान् हसद्भिर्नतिर्गृहीता मम सद्भिरतु ॥ १५१॥

शुत्याद्यवगत्याहतवृत्त्या जडमत्या-
ऽधृत्याऽधृतिमत्या परवत्या जनतत्या ।
सत्या चिदुपेत्या क्षितिभृत्यापरवत्याततनित्या
प्रीत्या भगवत्याविरभूत्याज्यकुगत्या ॥ १५२॥

श्रीभ्वीट् कुध्रभृदब्रुड्ड्ढवशिवेट्छक्रादिलेखेड्यप
च्छार्ङ्गच्छिन्नरिपुच्छिदिद्धविशिखाच्छन्नच्छविद्विट्छिराः ।
कार्तार्थ्यान्वहसंस्फुरत्सदघधक्छेषक्षितिध्रक्षयो
दद्यात्स्वस्त्यदरी दरीलसदरी नीलस्सनीलस्स नः ॥ १५३॥

तव मुखरुचिमाप्तुं सङ्घशक्त्या समाब्जो
नखमिषदशवर्ष्मा पादयोस्ते पपात ।
अथ तद सहमब्जं छादयत् तं सगन्धं
स्वयमपि बहुसङ्ख्यं तत्फलार्थं तथाभूत् ॥ १५४॥

श्रयति यस्य वधूर्हृदयं सदा स पुरुषोत्तम इत्यनिशं हरिः ।
स्वपुरुषोत्तमतामिव बोधयन् हृदयवासिरमः स मुदेऽस्तु नः  ॥ १५५॥

स्वांशं स्वामिसरस्यपारकुसुमे नॄणां मुदे कार्तिके
द्वादश्यां सितपक्षके प्लवमुपारूढं वृषाद्रीश्वरम् ।
दृष्ट्वा देवमुदे वियत्सरसि सत्सूनैऽकदम्भो हरिः
सुप्रेम्णोडुपमेत्य नीलरचितां नीलः स सङ्क्रीडते ॥ १५६॥

अघटितघटनापटुता यदि तव बहुलाघमुत्तमानन्दम् ।
श्रिभृत् कुरु मां नित्यं सेवे त्वां भवति हि स्वलाभस्ते ॥ १५७॥

त्वन्नामानि जपन्तं नित्यं रक्षसि कथं न मां श्रीश ।
लौकिकशब्दपरोऽहं किं तेऽखिलशब्दवाच्यता नो वा ॥ १५८॥

परं पदमयं स्वह्यतोऽप्यपरमेव वा स्यान्न चेत्
परापरविदां वरा वृषगिरीश ते सूरयः ।
कुतोऽन्यतमवस्तुतामिह चराचरेष्वात्मनाम्
अवेक्ष्य तदुपेक्ष्य ते निकटदेहलीत्वं ययुः ॥ १५९॥

वैकुण्ठाद्वृषशैल एव परमो यस्मात्ततोऽत्रागतः
तत्रत्यैः सह मोदसे कमलया भान्त्यत्र ते सद्गुणाः ।
द्योसन्मर्त्यपतत्पशुक्रिमिदृशां गम्योऽत्र पूर्णैनसः
दृग्योग्योऽसि ममापि हन्त विमुखाः पश्यन्ति ते स्वामिताम् ॥ १६०॥

नित्ये धाम्नि नमानमक्षमपि नो साक्षी न लिङ्गं क्षमं
नित्या गीर्बहुभिः परैरितरथा नीता स्वयं दर्शय ।
तन्मे विश्वसिमि श्रुताः स्वलु गतायाता भवस्था न चेत्
तन्मे दर्शयसे न तद्वृषगिरिः श्रेष्ठः परं श्रीनिधे ॥ १६१॥

पूर्वं त्वं निजधामनी तुलयितुं वैकुण्ठशेषाचलौ
रोदःपात्रगतौ विधाय नितरामूर्ध्वोद्गतं लाघवात्
उत्सृज्यादिममन्तिमं गुरुतयाऽधःस्थं श्रितोऽस्यादरात्
एतद्ज्ञापयितुं तथैव जगतः किं तौ निधत्से सदा ॥ १६२॥

लक्ष्मीलक्ष्म महः परं दधदिदं हैमं विदोषप्रभैः
सद्रत्नैः सहितं तमःप्रतिभटं धामाचलात्मोत्तमम् ।
अत्यर्कानलदीप्रमक्षरपदं विष्णोरिति स्वच्छधी-
योगीङ्गीर्विषयः स्वमित्यनुदिनं वक्तीव वीनां रवैः ॥ १६३॥

धाम्न्यस्मिन् बहुलक्षपापि विलद्भूभृन्महाराजते
स्रग्लग्नभ्रमरालिधीदतनुभातिश्यामहाराज ते ।
प्राकारे स्फुरितैर्विमानमणिराड्भासामहा राजते
जालैर्ध्वान्तहरैःकृतप्रियलसत्कोकीमहा राजते ॥ १६४॥

त्यक्तवा स्वार्थगणं परार्थघटकः सत्पूरुषः कीर्तितः
वात्सल्यादिभवद्गुणातिमहसे सोढ्वापि दुःखव्रजम् ।
दोषानेव सदा करोपि सुखदं पुण्यं न किञ्चित्क्वचित्
तस्मात्सत्पुरुषं भवद्धितपरं लक्ष्मीश रक्षस्व माम् ॥ १६५॥

कस्मैचिन्महते प्रसन्नमनसा भूपेन दत्तं वरं
ग्रामं तस्य सुतादयोऽप्यनधिका दासाश्च भूपाविदः ।
लोके भुज्जत एव तद्वदहमप्यज्ञोऽपि तेऽज त्वया
पूर्वाचार्यवशीकृतं तव पदं भोक्ष्ये हि तद्दास्यतः ॥ १६६॥

श्रीश त्वन्निकटे पुरार्थितवते मादृक्स्वकीयावली-
युक्तस्वस्य शठद्विपे करुणाया त्वं तत्फलं प्रादिशः ।
बह्वेकत्वनिरूपणोत्कवचना श्रीसूक्तिरस्यादिमा

सिद्धोदर्कमिवैतदीयमवदन्मां कास्ति चिन्ता मम ॥ १६७॥

कूरेशः स्वपदाश्रिताय हि चतुर्ग्रामाय लब्धैनसे
त्वां तस्मिन् विलसत्क्रुधं समुदितक्षान्तिं विधाय स्वयम् ।
स्वस्मै दत्तमदापयत्फलमतः श्रिश त्वयार्योऽपि मे
पूर्णाघाय च दापयिष्यति फलं स्वीयं ममत्वाश्रयः ॥ १६८॥

का कर्मज्ञानभक्तिप्रपदनविरहात् पातकेभ्यश्च भीर्मे
स्वाङ्घ्रौ बद्धाञ्जलीनामभिनयति हरिर्जानुदघ्नं भवाब्धिम् ।
उद्दिश्यैनं कदाचित्कथमपि च सकृत्कुत्रचिन्मेऽञ्जलिः स्या-
दार्योक्तोऽशक्तिबुद्धेरभिमतसुखकृच्छक्तलक्ष्यं परं हि ॥ १६९॥

मन्दो हन्त जनोऽनवद्यसुखदे सङ्कल्पमात्राद्वधू-
पुत्राद्यैहिकलोकदायिनि हरेर्नत्येकलभ्ये स्थिरे ।
हैमे धाम्नि नधीः क्षराल्पसुखदालभ्याधिकानर्थद-
स्त्रीहेमायतिकाङ्क्षयात्र बहुधा निचत्वमापद्यते ॥ १७०॥

उत्पूलुत्य त्वरया सुशीलकणो वैकुण्ठतोऽमुं श्रितः
चिह्नं भूधरनिम्नता क्कनु गता सा ते त्वरा वश्यवे ।
दीनस्यात्यघिनोऽगतेर्मम पुरो न प्रादुरासीः कुतः
श्रीभृल्लोकुगुणस्तवापि किमभूद्धीमान्द्यमस्यैनसा ॥ १७१॥

भक्त्यङ्गं किमुत प्रपत्तिमिलितो हेत्वन्तरं वा फलं
हेतुर्नान्यफलस्य कृत्स्नमपि नो किञ्चित्त्वयैवाञ्जलिम् ।
त्वत्पादेऽरचयं कथाञ्चिदव वा मा वाऽघमग्नं तु मां
कुर्वस्यानमतश्चिनत्सि तु करं दीनः करोमीश किम् ॥ १७२॥

विलोक्य मम देशिकं वरभवत्पदैकाश्रयं
अकिञ्चनमसद्गतिं बहुलपापमग्नाशयम् ।
त्वदङ्घ्रिशरणागतिं कथमपीरयन्तं जडं
न वीक्ष्य मम दुष्टतां स्वकृतवित्त्वमेवाव माम् ॥ १७३॥

दुःखं मां शरणागतं भजति चेत्क्रन्दामि तद्दर्शिनः
तन्न स्याद्यदि ते दयाविरहितः स्यास्तद्भवेत् ते यदि ।
निर्दोषो न भवेर्द्विधा श्रुतिशतोत्सादस्तथान्यश्रुतेः
सिध्येन्नैव किमप्यतः परममुं रक्षाखिलाघव्रजात् ॥ १७४॥

वाचामगोचरमनन्तमनन्यनिष्टं

श्रुत्यादिसिद्धमनिशं गुणमण्डलं ते ।
आच्छाद्यपूर्वमिदमेव ममापि चित्रं
अस्यैकदैव हि विरुद्धभयाभये स्तः ॥ १७५॥

कामादिदोषनिवहः परिवर्धते मे
जानन्नधीरपि सदा रचयाम्यघानि ।
दुस्सङ्गतौ रुचिरतोऽनुशयः कदापि
नोदेति हन्त कथमीदृगहं तरेयम् ॥ १७६॥

रागं विवर्धय भवच्चरणारविन्दे
दोषेषु यत्नमनिशं विफलं कुरुष्व ।
बालाद्यवद्यपरिहारनयादयुक्तं
मा दर्शयार्जय सदा भवदीयसङ्गम् ॥ १७७॥

हातुं नाथ नभोगतां वृषधरावास त्वमासीद्घनः
चिह्नं चामृतदत्वमाश्रयविनाभावासहाऽगात् तटित् ।
अस्थैर्ये विमनाश्च मात्वमिहते वक्षस्यलोलस्थितौ
लक्ष्म्यां श्रीश्चपलेति लोकवचनं विद्युन्मयत्वार्थकम् ॥ १७८॥

कांश्चिद्रक्षसि मां कुतो न बहुना पापेन चेत्तत्कृतं
मन्दं मामनिवारयन् मयि वसन् दक्षः किलाकारयः ।
कूपान्तर्निपतन्तमर्भकमलं पश्यन्त्युपेक्षापरा
माताऽपातयदेव तत्त्वदुदितं पापं निवर्त्याव माम् ॥ १७९॥

अन्तःस्थो जगतां जनिस्थितिलयान् कुर्वन्नियन्ता स्वराट्
दुष्टघ्ने जननादिभाक् स्वमनसा श्रत्यादिमानोऽप्यहम् ।
न त्वं साक्ष्यवदः प्रमाणमशुभं वाचा किमेवंविधः
त्वं चेन्मामव पातकादकपटं त्वां निश्चिनोमीदृशम् ॥ १८०॥

कुर्वे दुःखकराण्यघानि मनसा कस्मादहं वासना-
मोहाद्यैरिति चेदमूनि किमु ते वश्यान्यवश्यानि वा ।
आद्ये तैस्त्वमकारयः स्वकरणैर्वश्यो न दण्ड्योऽस्म्यहं
पित्राज्ञारचितस्वमातृनिधनः किं जामदग्न्योऽघभाक् ॥ १८१॥

अन्त्ये यद्यलयानि तानि न सुखं स्यात्कस्यचित्किं त्वया
श्रीयन्ते यदि जातुचित्कथमपि श्रीनाथ किं वा त्वया
त्वत्तश्चेत्तदवारकः शकनवान्नाकारयोऽघं कुतः
मच्चेत्किञ्चिदपेक्षसे न हि भवेः पूर्णस्ततो रक्ष माम् ॥ १८२॥

निर्बीजं मम रक्षणे निखिलचिन्मुक्तिप्रसङ्गो यदि
स्यान्नौ का क्षतिरक्षरं तव पदं वर्धेत हीदङ्क्षयात् ।
लोकोऽयं सकलः सुखैकनिलयः स्याद्वा जनायं विना
लीला ते न घटेत चेत्तव कृते दुःखप्रदस्त्वं भवेः ॥ १८३॥

स्वाज्ञाभेदनिजस्वहृत्यपदवीचारस्थिरं प्रायशो
दण्डैरप्यनिवृत्तमेव निधनानर्हं स्वकीयं प्रभुः ।
स्वेच्छाचारनिरोधके दृढतरे धाम्नि स्वके पातय-
त्येवम्भूतममुं रमाधव कुतो मा पातयस्यक्षरे ॥ १८४॥

बालं कर्मपिताप्यकार्यशतकं कृत्वाप्यदोषोऽवति
त्वं तातोऽनुपधिः स्वराडशरणं दीनं जडं माममुम् ।
मर्यादामनवप्रमाणगदितामुत्सृज्य वा पासि चेत्
का ते हानिरनीदृशेषु भवतात् सा सर्वविच्छ्रीनिधे ॥ १८५॥

मर्यादामवधीर्य चक्रमधरो विप्रात्मजानक्षरं
धामारोप्य पुनर्द्विजाय समदास्तस्मात्समानीय तान् ।
घण्टाकर्णमुखद्विषः समनयो मुक्तिं परां श्रीनिधे
सन्त्यन्यानि निदर्शनानि च शतं मय्येव सा पाल्यते ॥ १८६॥

चेतोवाक्तनुकर्मभिः क्षरतमैः कालान्तरे कार्यकृत्
कल्प्यं कर्तृगतं स्वतस्त्वकुशलं किञ्चिद् गतं लाघवात् ।
विद्वत्कारकधर्मतां तदिह ते कोपो हि मद्गोचरः
पापं मे त्वदनुग्रहेऽत्र परमे कुत्रैष तिष्ठेद्धरे ॥ १८७॥

कस्मान्नावसि मां हरे मयि गुणो नास्तीति चेत् किं त्वया
दोषे सत्यवितुं यथा न निपुणो नैवं गुणे शिक्षितुम् ।
रक्षारक्षणयोर्गुणागुणगता स्याद्दक्षता तद्भव-
न्नाथत्वाय सदोषमस्तगुणमप्येतं प्रभो रक्ष माम् ॥ १८८॥

वीक्ष्य श्रीट् प्रभुतां भयात्तव मुदे भ्रान्त्या नु मुग्धं जनः
त्वामाहाखिलवेदिनं स्वमवति स्वार्थार्थमेव स्ववान् ।
स्वस्य स्वानवने क्षतिः स्वमवितुं स्वं नैव दक्षं त्विति
त्वं नो वेत्स्यथ वेत्सि चेत्कथममुं स्वामिन्न मां रक्षसि ॥ १८९॥

नाम्बामम्बेति तातेत्यपितरमपि किं वक्ष्यसिशोऽपि याच्नां
दौत्यं वा सारथित्वं गिरिधृतिमवनेरुद्धृतिं वा वनान्ते ।

सञ्चारं दैत्यरक्षोबहुविधनिधनं दावपानं दयालो
मद्रक्षार्थं [करिष्यस्यजित बत कुतो मुग्धवत्तिष्ठसि त्वम्] ॥ १९०॥

॥ इति श्लोकानिमान् सप्त श्रीनिवासगुणाकरे ॥

॥ श्रीशैलस्तातयाचार्यो व्याख्यया समयोजयत् ॥

॥ इति श्रीनिवासगुणाकरः ॥

॥ यावदुपलब्धः ॥